योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 306 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 31 अगस्त 2021 मंगलवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

जानीयात्प्रेषणेभृत्यान्
बान्धवान्व्यसनाऽऽगमे।
मित्रं ह्याऽऽपत्तिकालेषु
भार्यां च विभवक्षय

अर्थात - किसी महत्वपूर्ण कार्य पर भेज़ते समय सेवक की पहचान होती है। दु:ख के समय में बन्धु-बान्धवों की पहचान होती है, विपत्ति के समय मित्र की तथा धन नष्ट हो जाने पर पत्नी की पहचान होती है।

### संक्षेपेण वार्ताः

## काबूल् आक्रमणस्य सूत्रधारः हत इति यू एस

**वाषिङ्टण।** काबूल विमानपत्तने दुरापन्नस्य रक्तरूषिताक्रमणस्य सूत्रधारः 'ऐ एस् - खोरासन' नामकभीकरसंघटनस्य नेता यू एस् सेनया व्यापादित इति अमेरिक्कायाः 'सेन्ट्रल् कमान्ड् क्याप्टन्' बिल् अर्बन् इत्यनेन उक्तम्। खोरासनस्य शक्तिकेन्द्रमिति प्रकल्प्यमानं नङ्गहारं नामकं प्रदेशं लक्ष्यीकृत्य नीतेन 'रीप्परड्रोण'यन्त्रेणैव केनचन मित्रेण सह सूत्रधारस्य वधं साधितमिति तेनोक्तम्। आत्मघातिस्फोटनेन सह कृते भुषुण्डिप्रयोगे च अफ्गानिनः यू एस् सैनिकाः च समेत्य 182 जनाः मृताः आसन्।

## वाक्सिनस्य मात्रा द्वयं स्वीकृतवताम् आराष्ट्रं प्रयाणानुज्ञा

**नवदेहली।** कोविड्वाक्सिनस्य मात्राद्वयमपि स्वीकृतेभ्यः जनेभ्यः राष्ट्रे यत्रकुत्रापि आ ंटि पि सिआर निकषं विनैव यात्रां कर्तुं भारतसर्वकारेण अनुज्ञा दत्ता। रोगलक्षणानि सन्ति चेत् 'आन्टिजन' परीक्षणम् आवश्यकम्। राष्ट्रे कोविड्रोगव्यापनम् आकुञ्चदस्ति इत्यत एव ईदृशं लाघवं निर्दिष्टम् विविधराज्यैः अन्तर्राज्यप्रयाणाय भिन्नभिन्नाः मानदण्डाः स्वीकृताः इत्येतत् यात्रिकाणां क्लेशकारणमासीत्। किन्तु यत्र रोगव्यापनं तीव्रमस्ति तादृशेषु राज्येषु प्रादेशिकावस्थां निरीक्ष्य नियन्त्रणं विधत्तुमधिकारोऽस्ति।




### सर्वाधिक जनसङ्ख्यामाने प्रदेशे एकस्मिन् दिवसे त्रिंशतलक्षाधिकाः प्रदत्ताः मात्राः

# वृहद् सूच्यौषधीकरणाभियानम्, उत्तर प्रदेशेन स्थापितम् उदाहरणं, सूच्यौषधीकरणं सप्तकोट्यधिकम्

### तीव्रतया सूच्यौषधीकरणं कृत्वा लक्ष्यसमीयं प्राप्तः उत्तरप्रदेशः



**लखनऊ।** उत्तर प्रदेशेन कोरोना सूच्यौषधीकरणे अपरप्रदेशाः पृष्ठे कुर्वता स्वीयनाम्ना एकं नूतनकीर्तिमानं प्राप्तम् । महाराष्ट्र– दिल्ली– आन्ध्रप्रदेश– पश्चिमबङ्गालः चेत्यादिभिः सह अन्येभ्यः अन्यकेभ्यः राज्येभ्यः अग्रे निर्गत्य सप्तकोट्यधिकाः सूच्यौषधीकरणस्य मात्रा प्रदत्ताः। एतत् विवरणं देशस्य अपरप्रदेशानाम् अपेक्षया बहुऽधिकोस्ति। उत्तरप्रदेशः सूच्यौषधीकरणेन सहैव सर्वाधिकं परीक्षणं क्रियमाणः प्रदेशः अस्ति। ट्रिपल–टी–इत्यस्य रणनीतिः सूच्यौषधीकरणेन उत्तरप्रदेशे कोरोणासङ्क्रमणस्य द्वितीयलहरी नियन्त्रणे अस्ति। प्रदेशे वृहद सूच्यौषधीकरणाभियानस्य अन्तर्गतं 'सर्वेषां सहयोगः, सर्वेषां विकासः, सर्वेभ्यः सूच्यौषधीकरणं, निःशुल्कं सूच्यौषधीकरणं' इत्यस्य मूलमन्त्रे सूच्यौषधीकरणं क्रियते। प्रदेशे सूच्यौषधीकरणस्य प्रथममात्रा नवतिलक्षपञ्चाधिककोट्यधिकेभ्यः अपि च सूच्यौधीकरणस्य द्वितीयमात्रा एकादशलक्षैककोट्यधिकेभ्यः प्रदत्ता । वृहद् सूच्यौषधीकरणाभियानस्य अन्तर्गतं एकस्मिन् दिवसे त्रिंशतलक्षादधिका मात्रा प्रदत्ता । येषु एकस्मिन् दिवसे सर्वाधिकसूच्यौषधीकरणं कृत्वा उत्तरप्रदेशेन देशस्य अन्येषां प्रदेशानां समक्षे उदाहरणं प्रस्तुतम् ।

## उत्तरप्रदेशः एवं अभवत् महाराष्ट्रस्य, देहल्याः अन्यप्रदेशानां च अपेक्षया सूच्यौषधीकरणे प्रथमः

चतुर्विंशतिकोटिनां जनसङ्ख्यामानः उत्तरप्रदेशः देशस्य अन्येषां प्रदेशानां अपेक्षया सूच्यौषधीकरणे बहु अग्रे अस्ति । पश्चिमबङ्गालः महाराष्ट्रः, देहली चेत्यादिभिः सह अन्येषु प्रदेशेषु यत्र न्यूनजनसङ्ख्याकारणेन अपि सूच्यौषधीकरणं मन्दगत्याः चलति तत्रैव उत्तरप्रदेशः निरन्तरं कीर्तिमानं स्थापयति । पश्चिमबङ्गाले अधुना पर्यन्तं 3,88,18,895सङ्ख्यकानि, केरले 2,78,63,770सङ्ख्यकानि, महाराष्ट्रे 5,66,99,572सङ्ख्यकानि, देहल्यां 1,31,49,889सङ्ख्यकानि, तमिलनाडोः 3,10,20,485सङ्ख्यकानि एव सूच्यौषधीकरणानि कृतानि।




## लक्ष्यस्य समीपं प्राप्तः उत्तरप्रदेशः

उत्तरप्रदेशे सूच्यौषधिकरणाभियानं गतिं ददता नगरीयग्रामीणक्षेत्रयोः युद्धस्तरे सूच्यौषधिकरणं क्रियते । अगस्तमासस्य तृतीयदिनाज्ञतः उत्तरप्रदेशेन पञ्चकोटिसङ्ख्यकानि सूच्यौषधिकरणानि कृत्वा एकं कीर्तिमानं निर्मितम् आसीत् तत्रैव उत्तरप्रदेशः सप्तकोटि सङ्ख्यकानि सूच्यौषधिकरणानि कृत्वा स्वीयनिर्धारितं सूच्यौषधिकरणं प्रति तीव्रतया अग्रे वर्धते। मिशनजून इत्यस्यान्तर्गतं प्रदेशसर्वकारेण एककोटिभ्यः जनेभ्यः सूच्यौधिकरणस्य मात्राप्रदानस्य लक्ष्यं निर्धारितम् आसीत् परन्तु प्रदेशे ततोऽपि अधिकेभ्यः नवविंशति सहस्रैककोट्यधिकेभ्यः सूच्यौषधिकरणस्य मात्रा प्रदत्ता ।



सूच्यौषधीकरणे महाराष्ट्र–देहली–आन्ध्रप्रदेशः चेत्यादिभिः सह अनेकेभ्यः राज्येभ्यः अग्रे निर्गतः उत्तर प्रदेशः

# विद्यालयानां भित्तितः प्रदास्यते सशक्ति करणस्य सन्देशः

### मिशनशक्त्यान्तर्गतं भित्तिषु दृक्ष्यते स्वावलम्बनस्य आत्मनिर्भरतायाः च कथा

**लखनऊ।** विद्यालयानां भित्तिद्वारा अधुना महिला सशक्तिकरणस्य सन्देशः प्रदास्यन्ते। महाविद्यालयानां माध्यमिक विद्यालयानां भित्तिषु नारी शक्त्याः युक्तानि उद्घोषानि चित्राणि च महिलाशक्तिः प्रदर्शयिष्यते। प्रदेशसर्वकारेण मिशन शक्त्याः तृतीयचरणे सम्पूर्णप्रदेशे महाविद्यालयानां, माध्यमिक विद्यालयानां, प्राथमिक विद्यालयानां भित्तिषु मिशन शक्तियुक्तं चित्रं भित्तिलेखनं च कारयितुं निर्देशः दत्तः। माध्यमिक विद्यालयेषु महिला सहायता केन्द्राणां सर्वाः दूरवाणीसङ्ख्याः अपि भित्तिषु लेखनीयाः। कक्षायां शिक्षकैः छात्र–छात्राभ्यः नारी स्वावलम्बनम्, आत्मनिर्भरतां, सशक्तिकरणं चेत्यादिभिः युक्तकथाः श्रावयिष्यन्ति तदा तत्रैव विद्यालयानां भित्त्यः मिशनशक्ति–अभियानस्य अन्तर्गतं महिलानां स्वावलम्बनस्य परिचयः दास्यते। मिशनशक्ति–अभियानस्य अन्तर्गतं प्रदेश सर्वकारेण उच्चशिक्षा विभागस्य बालिकानाम् उत्साह वर्धनाय राष्ट्रिय छात्र सेनया युक्तेषु कार्यक्रमेषु जागरूकता कार्यक्रमेषु महिला–आरक्षि–अधिकारिणः आह्वातुम् उक्तम्।

### प्रदेशसर्वकारेण उच्चमाध्यमिकशिक्षाविभागाय दत्तः निर्देशः



भित्तिषु मुद्रिता भविष्यति महिला सहायता सङ्ख्या

प्रदेश सर्वकारेण उच्चमाध्यमिक शिक्षा विभागस्य अधिकारिणः निर्दिष्टः यत् तेन सर्वकारस्य सहायता सङ्ख्याः भित्तिषु मुद्रणीयम् । साकमेव व्यापक रूपेण छात्र–छात्राणां मध्ये अस्याः प्रचारः प्रसारः करणीयः । विद्यालयेषु छात्र–छात्राभिः एव भित्तिषु भित्तिलेखनं करणीयम् ।

## भारते समागतेभ्यः अफ्गान् नागरिकेभ्यः षण्मासीयं प्रवेशानुमति पत्रं दास्यति



**नवदेहली।** भारते समागतेभ्यः अफ्गान् नागरिकेभ्यः षण्मासीयं प्रवेशानुमतिपत्रं दास्यति इति भारतीयसर्वकारः। अधुना वर्तमाने काले अफ्गान् नागरिकाणाम् आगमनं षण्मासीय प्रवेश पत्र सुविधायाः अधीने एव इति विदेशकार्य मन्त्रालय वक्त्रा अरिन्दं बाग्चिना प्रोक्तम्। एषा एव षण्मासीया वर्तमान काल व्यवस्था। वातावरणानि परिणमेत तर्हि तदीय-पत्रस्य दीर्घीकरणं वा स्थिरानुमतिः वा चिन्त्येत इति बाग्चिना निगदितम्। भारतम्अफ्गानिस्थानात् इतःपर्यन्तं 552 अधिकजनान् अरक्षत्। विविधैः षट्भिः विमानैरेव आसीत् आसीत् रक्षा प्रवर्तनम्।

# नव न्यायाधिपेभ्यः सर्वोच्च न्यायालयं प्रति स्थानोन्नतिः

### तिस्रः महिलाः युगपत् प्रथमं प्रवेशं प्राप्नुवन्ति



**नवादेहली।** तिस्रः महिला न्यायाधिपाः समेत्य नव उच्चनीति पीठस्थाः न्यायाधिपाः सर्वोच्चनीतिपीठस्य न्यायाधिपरूपेण पदोन्नतिं प्राप्तवन्तः। न्याय. हिमा कोहली डतेलुङ्गनस्य उच्चन्यायालयस्य मुख्यन्यायाधिपा, न्याय. बेला एम् त्रिवेदी डगुज्रालस्य उच्चन्यायालयः, न्याय. बि वि नागरत्ना इत्येताः तिस्रः महिला न्यायाधिपाः। सर्वोच्चनीति पीठस्य मुख्य न्यायमूर्तिनः एन् वि रमणस्य आध्यक्षे वर्तमानेन पञ्चाङ्ग मण्डलेन समर्पितमावेदनम् राष्ट्रपतिना अङ्गीकृतमासीत्। कर्णाटकस्य मुख्य न्यायमूर्तिः ए एस् ओकः, सिक्किमस्य मुख्य न्यायमूर्तिः जे के महेश्वरी, मद्रास् उच्च न्यायालयस्थः न्याय. ए एम् सुन्दरेशः, न्याय. सि टि रविकुमारः डकेरलस्य उच्चनीति पीठः, न्याय. विक्रम नाथः , न्याय. पि एस् नरसिंहः एत्येते अपरे प्राड्विवाकाः।

## सम्पादकीयम्

### कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन इत्यस्युपदेष्टा श्रीकृष्णः

श्रीकृष्णः षोडशकला सम्पृक्तः अवतार पुरूषः आसीत्। अस्य जन्म द्वापरयुगेभाद्रपद कृष्णाष्टम्यां मध्यरात्रौकारागारे अभूत्। जन्मतः अस्य लीलाकौतुक पूर्णा आसीत्। कारागारस्य सर्वे रक्षकाः घोरनिद्रायां सुसुप्ताः अभूवन्। अस्मिन् मध्ये एव देवक्यादक्षिण कुक्षतः भगवतः श्रीकृष्णस्य जन्मजातं। तंशिशुसूर्पेनिधाय शिरसिस्थाप्य वसुदेवः गोकुलं प्रति प्रस्थितोऽभवत्। परितः गहनान्धकारः व्याप्तमासीत, अतिवृष्टिः भवतिस्म, यमुना नदी आप्लावितातथापिव सुदेवः कृष्णमादाय यमुनायाम् प्रविष्टोजातः। यमुना कृष्णस्य पादस्पर्शाय उद्वेलिताऽसीत् यदाकौतुकेनश्रीकृष्णस्य चरणयोः स्पर्शंअभवत् तदा यमुनयावसुदेवगमनाय मार्गंप्रशस्तंक्रियतेस्म। सः गोकुलं गत्वा यशोदा प्रसूति गृहे प्रविश्य नवजात बालिकां उत्थाय श्रीकृष्णंतद् स्थाने संस्थाप्य तेनैव मार्गेण यथाशीघ्रंपुनः कारागारे समागतवान्। इयं घटना सर्वेजानन्ति एव। निष्कर्षत्वेन इदं कथितुं शक्यते यत् श्रीकृष्णः आपदा कालेऽपि धैर्यस्य धारणाय प्रेरयन्ति। अस्मद् समाजे बहवः कंसाः, शिशुपालाः, मुराः बहुराक्षस रूपाः समग्रे भारते विपरीताभिः भावनाभिः कुचक्रं रचयन्ति, द्रक्ष्यामः वयं धैर्येण यथासमये एतान् दुर्धषान् विहन्य भारतस्य कर्णधारकाः सुविचारकाः शासकाः भारते शान्तिर्स्थापना करणेस फलीभूताः भविष्यन्ति। श्रीकृष्णस्य उपदेशोऽयं कर्मण्येवाऽधिकारस्तेमाफलेषु कदाचन अस्माकं जीवने संघर्ष कर्त्तुं प्रेरणांददाति। श्रीकृष्णजन्माष्टमी पर्वणि अन्येषां भारतीयानां कृते शुभाशयाः।

## ॐ नमः श्रीकृष्णाय



भक्तप्रेमविशालपालकरविर्नीलाभ्रमालावृतो
दीप्तोनंगतुरंगमो विभुमहाविष्णुप्रियो माधवः ।
राधारासविलासलासिततनुश्चिन्मात्रदृग्गोचरः
कुर्यान्मंगलमादरं प्रभुवरः श्रीबालगोपालकः 1
कृष्णांगरागविलसन्तमचिन्त्यतत्त्वं
प्रेमावतारसुरभारतवर्षसारम् ।
राधाधवं सुरुचिरं कुलपालकं तं
गोपालबालकमहापुरुषं भजामि 2
जन्माष्टमी तव सदा परिपालयन्ती
आनन्द-नन्दतनयाधिपबालवेश ।
गोपालपालकमहामहिमं सरूपं
कृष्णं कदा यदुपतिं शिरसा नमामि 3
मायान्धकारपरमेश्वरकृष्णपक्षं
श्रीदेवकीकुलकलाकरकृष्णबालम् ।
भाद्रे सुभद्रवसुदेवविचित्रबीर्य्यं
जन्माष्टमी सुरभितं भगवन्तमीडे 4
कंसान्तकं सकलपालकधर्ममूलं
राधाधवं नटवरं नवनीतचौरम् ।
वंशीनिनादचतुरं नवनीरदाभं
श्रीवासुदेवचरणौ शरणं गतोएस्मि 5
मदनजनकविष्णुर्भूमिलीलावतंसः
निरतिशयविशेषो योगमाधुर्यशीतः ।
परिजनपरितोषो ब्रह्मगोलोकनाथः
प्रभवतु मम गेहे द्वैतवेदान्तलक्ष्यः 6
राधे राधे । जय श्रीकृष्ण ।

**नन्दप्रदीप्तकुमारः**

# 'रामगिरेश्चित्रकूटस्याश्रमेषु वसतिम्'


चित्रकूटघाम

दृङ्मनः सङ्गसंकल्पाः जागरः कृशतारतिः। ह्रीत्यागोन्माद-मूर्च्छान्ता इत्यनङ्गदशा दशः। कथं यक्षो रामगिरि एव निर्वासितः अन्यत् स्थानं नास्ति वा अस्ति चेत्तथाप्यन्यत्र निर्वासनं महाकवेर्नाभीष्टम्। निर्वासनविषये उपयुक्तस्थानमेतत् 'रामगिरि' इति। यतो हि स्थानमेतत् प्रेमीप्रेमिकयोः रामसी-तयोः मधुरस्मृति समन्वितम्। जनकतनयायाः सीतायाः अवगाहनेन तत्रस्थं जलाशयादिकं पवित्री कृतम्- 'जनकतनया-स्नानपुण्योदकेषु' इति। तथाह्युच्यते टीकायाम् - 'एतेन पतिव्रतासंयोगात् पुण्यत्वं निरुपितम्' इति। पुनश्च स्निग्धच्छायातरुषु वसतिमित्यादिना वियोगिनो योग्यं स्थानं ध्वन्यते। एवम्प्रकारेणाश्रमस्य सर्वत्रैव तस्य प्रेमिकयुगलस्य प्रेमछाया पतितेति। तेन यक्षस्य प्रियाविच्छेदपीडा क्रमेण बर्धिता जाता। 'गण्डस्योपरि पिण्डकः संवृत्तः इत्यावस्था संप्राप्ता यक्षस्य। मल्लिनाथमते रामगिरेर्नामान्तरं 'चित्रकूट' इति - 'रामगिरेश्चित्रकूटस्याश्रमेषु वसतिम्' इति। उत्तररामचरितस्य चित्रदर्शनमिति प्रथमाङ्के चित्रकूट पर्वतेऽवस्थानकाले रामसीतयोः प्रणयलीला कविना चित्रमाध्यमेन समुपस्थिता। तथाहि - 'लक्षणः। एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम। (रामः सस्पृहमवलोकयति) सीता। सुमरदि एदं पदेसं अज्जउत्तो? (स्मरत्येतं प्रदेशमार्यपुत्रः) रामः। अयि! कथं विस्मर्यते! अलसलुलित मुग्धान्यध्व सञ्जातखेदात् अशितिल परिरम्भैर्दत्त संवाहनानि। परिमृदित मृणाली दुर्बलान्यङ्गकानि त्वमुरसि मम कृत्वा यत्र निद्रमवाप्ता। अपि च, चारित्रवर्धनाचार्येण तस्य टीकायामाकुलितम् - 'अतो रागस्य स्थितिमात्रात्तीर्थभूतोऽयं पर्वत इति तमेवावीभजत्। यतो यतो 'यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते' इति। जनकात्मक जाविरहितो रामस्तत्रासीनस्तां प्राप्तवान्। अतो ममाप्येवं स्थानमहिम्ना कान्तासङ्गतिर्भविष्यतीति तस्याश्रयणम्।' उपसंहृतिः 'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते'इति महाभाष्यवचनम्। शब्दानां महती शक्तिर्विद्यते खलु। यथा केनापि जनेन कमुद्दिश्य अपशब्दाः प्रयोक्त व्याश्चेत्तर्हि झटिति एव विवादः सञ्जायते। वस्तुतस्तु अपशब्दो नोच्चारणीयः। भर्तृहरिनये शब्दः किल् स्वयं ब्रह्म एव। तेनावाचि - अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थ भावेन प्रक्रिया जगतो यतः। महाकविकालिदा सदृष्ट्यापि शब्दार्थौ तावत् पार्वती परमेश्वर स्वरूपौ - वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वन्दे पार्वती परमेश्वरौ। तथाहि ईश्वरस्वरूपाणां शब्दानां यथास्थानं प्रयोगः कृतो महाकविना सुचारुतया। शब्दब्रह्मणा एव का-लिदासकीर्तिः प्रोज्ज्वला उत्तरोत्तरं बर्धिता च जातेतिदिक्। कालिदासकाव्ये सर्वे चरित्राः दोषगुणयुक्ताः। कालिदासो दोषाणां प्रश्रयद्वारा दुःखमयपरिणतिः न प्रदर्शयति। चित्तसंस्कारेण आत्मसंस्कारेण च उत्तमचरित्रं स्थापयति। यदा यदा शापस्यावतारणा तदा तदा तस्य प्रशमणं तत्परं परमानन्दम् प्रकाशीक्रियते कविना। अतः काव्ये शापो न शाप आशीः। शापोऽयं अध्रुवप्रणयस्य धुवप्रणये उत्तरणमार्गः। मेघदूते शापेन प्रेमपरीक्षा। यक्षस्य प्रियामिलने हानिः न ईप्सितः महाकवेः कालिदासस्य। कालिदासस्य वक्तव्याशयः पवित्रप्रेम्नि क्षुद्रसीमा न ग्रहणीया, समग्रे विश्वे परिसीमा कल्पनीया। कर्तव्यसम्पादनेन तत्सम्भवति। इति हेतोः शापः यक्षप्रभुना शिवानुचरेण कुबेरेण। अत एव स्वाधिकारविषये ध्यानं देयम्, तदभावे महान् अनर्थकः भविष्यति। धनपतेः कुबेरस्य शापेन यक्षस्य माहात्म्यं सामर्थ्यं वापगतम्, तदर्थम् - 'शापेनास्तङ्गमितमहिमा' इति पदस्य प्रयोगः कृतो महाकविना। अत्र तु यक्षस्य महिमा कुबेरेण चिराय नापहृतः। शापावसाने स यक्षः सर्वं पूर्वमहिमानं प्राप्तुं समर्थो भविष्यति। किञ्च महिमाविसर्जनं तेन न कृतम्, प्रभुना एव तस्य महिमा खर्वीकृतः। तदर्थं गमितमिति णिजन्तप्रयोगः। यक्षाधिपस्य कुबेरस्यानुचरः कश्चिद् यक्षः स्वकर्तव्यपालनेऽक्षमः सञ्जातः। अतः स्वामी कुपितः सन् तं यक्षं पत्न्या वियुक्तं कृतवान् निर्वासनदण्डदानेन। ततस्तस्य सर्वमेव सामर्थ्यम् अपगतम्। एवं यदि न क्रियेत तर्हि मायाविद्याबलेन स यक्षः स्वप्रियायाः समीपे कस्मिन्नपि काले गन्तुं शक्नोति एव। तेन अलकात्तस्यापसारणेन दण्डदानस्य लक्ष्यमपि वैयर्थमा-पद्येत। तमुद्देश्यं सफलीकर्तुम् 'अस्तङ्गमितमहिमा' इति यु-क्तियुक्तोऽयं पदप्रयोगः। धनपतिक्रोध विश्लेषितस्य यक्षस्य निर्वासनं तावदलकातो रामगिर्याश्रमेऽभवत् - 'स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु' इति। रामगिर्याश्रमेष्वित्यत्र बहुवचनग्रहणस्य किमस्ति तात्पर्यम् बहुवचनग्रहणेन प्रियाबिच्छेदजनितस्य विरहातुरस्य यक्षस्य मर्मवेदना दृढतया प्रकाशिता। फलतस्तस्य मनसि प्रशान्ति। मत्तगज इव स्थानतः स्थानान्तरे परिभ्रमति। कुत्रचिदपि तस्य स्थितिर्न विद्यते।

# निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु, प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते। महाकवेः कालिदासस्य कीर्तिषु मेघदूतमिति खण्डकाव्यं विप्रलम्भशृङ्गारसमन्वितमनवद्यञ्च। मल्लिनाथस्य 'माघे मेघे गतं वयः' इत्यनेन वचसा बुध्यते यद् घण्टाकविमाघस्य शिशुपालवधमिति महाकाव्यस्य, दीपशिखाकालिदासस्य मेघदूतमिति खण्डकाव्यस्य चेति रचनाद्वयस्याध्ययनेन वयः अतिक्रान्तो भवतीति। रचनासु शब्दचयनविषये कालिदासः खल्वतीव प्रयासशीलः। यतो हि - 'एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके च कामधुग् भवति'5 इति। तेन प्रयुक्ता मनोहराः सुखदाः सुप्रसिद्धाश्च बहवः शब्दा मेघदूते बहुश एव दृश्यन्ते। वस्तुतस्तु (महाकविना) काव्ये प्रयुक्ताः शब्दाः खलु परिवर्तनानर्हाः अपरिवर्तनशीलाः वा। परिवर्तनं कृतञ्चेत्तर्ह्यभिप्रेतार्थस्य प्रकाशनं सुस्पष्टतया न घटते। 'र्मिदसंग' इति साहित्यतत्त्वमीमांसकनये महाकविना प्रयुक्ताः शब्दाः खलु 'र्हिर्म्ह्रिगहु र्जिग्दहे', 'एिर्ल्मित र्जि-ग्दहे', चेत्यादिनाम्नाभिधीयन्ते। अर्थाद् यान् शब्दानाधारीकृत्य काव्यस्य मर्ममूले प्रवेष्टुं शक्यते, ये शब्दाः खलु सुप्रसिद्धाः, ते एव 'र्हिर्म्ह्रिगहु र्जिग्दहे', 'एिर्ल्मित र्जिग्दहे' चेत्यादिनाम्ना परिचीयन्ते। महाकविना कृते शब्दे व्यञ्जना वर्तते खलु। व्यञ्जनाया विद्यमानतया तत्र शब्दानामु पादेयत्वमुत्तरोत्तरं बर्धितं स्यात्। आचार्यवर्येण रमारञ्जनमहोदयेनोक्तम् - 'यत् खलु काव्यं शब्दवाच्यार्थयोः सङ्कीर्णां वेष्टनीमतिक्रम्य उन्नतक्षेत्रे प्रविशति तदेव काव्यमुच्चाङ्गकाव्यत्वेन गृहीतं भवति'6 इति। तथाहि 'शब्दचयने कालिदासस्य वैदुष्यता' (मेघदूतस्य पद्यमेकम्) इति निबन्धे शब्दानां गूढार्थः स्पष्टीक्रियतेऽधस्ताद् मया - आदौ पद्यम् कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः, शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः। यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु, स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु। कश्चित् 'समाप्तिकामो मङ्गलमाच-रेत्' इति विधिः आवहमान कालादेव प्रचलति। अर्थाद् विघ्ननाशार्थं ग्रन्थ समाप्त्यर्थञ्च मङ्गलाचरण मवश्यकर्तव्यम्। अनुरूपेणैव प्रकारेण भाषापरिच्छ-देऽपि मङ्गलाचरणविषये कथ्यते यद् - 'विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः, नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्। समाप्तिस्तु बुद्धि-प्रतिभादि कारणकलापात्' इति। अन्यतो महाकाव्यस्य लक्षणनि रूपणप्रसङ्गे आचार्येण दण्डिनोक्तम् - सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्। आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्। अत्राप्युल्लिखितमस्ति यद् महाकाव्य स्यादा वाशीर्वादसूचकं नमस्कार विषयकं वस्तुनिर्देशात्मकं किमपि प्रशस्तिवचनं कविना सूच्यते। मेघदूते महाकविना वस्तुनिर्देशः कृतः खलु।मेघदूतमिति खण्डकाव्ये तात्त्विकदृष्ट्या मङ्गलाचरणं न क्रियते। प्रसङ्गेऽस्मिन् टीकाकाराणां मतवैभिन्न्यं वर्तते। तेषां मतानुसारेण मेघदूते मङ्गलाचरणमस्तीति। महाकविकालिदासप्रणीतं मेघदूतन्तु मन्दाक्रान्ताछन्दसा विरचितमेकं श्रेष्ठं खण्डकाव्यम्। विप्रलम्भशृङ्गारविषयकं वृत्तं खलु मन्दाक्रान्तेति। 'मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गयुग्मम्।' इति मन्दाक्रान्तालक्षणे प्रथमो गणो 'म' इति मङ्गलसूचकः। तथाह्युच्यते विद्युल्लतायां पूर्णसरस्वती महाभागेन - 'विश्वमङ्गलनि दानमवनिदेवताकं मगणमादौ प्रयुञ्जान' इति। अपि च 'कश्चित् कान्ताविरहगुरुणा...' इत्यादिश्लोके आद्यक्षरस्तावत् 'क' इति। ब्रह्मवाचकः शब्दो भवति 'क' इति। विद्युल्लतायामुच्यते - 'कं ब्रह्म खं ब्रह्म इति, पुनस्तु 'वह्नीन्द्रोपेन्द्रमित्रे क' इति। 'क' इति प्रजापतिदेवता इत्यस्ति हिरण्यगर्भे सूक्ते - 'कस्मै देवाय हविषा विधेम'11 इति। अपि च परमेश्वरस्य 'सुमनोत्तरी' इति टीकायां प्राप्यते - 'अत्राप्यविघ्न परिसमाप्त्यादि-कार्यदर्शनादनुमानसिद्धमेव मङ्गलाचरणम्। ग्रन्थनिवेशनमात्रमेव न कृतम्' इति। अर्थाद् मेघदूतमध्ये मङ्गलाचरणं क्रियते इति त्वनुमानसिद्धम्। 'कार्यनियतपूर्ववृत्ति कारणम्' इत्यनुसारेण ग्रन्थसमाप्तिरूपकार्यात् पूर्वं मङ्गला चरणरूपकारण-मस्तीत्यस्मिन् विषये नास्ति कोऽपि सन्देहावसरः। कश्चिद् यक्षः मेघदूते यक्षस्य नाम महाकविना न दत्तम्। केवलमेव कश्चिदित्युक्तम्। तत्रास्ति शास्त्रवचनम् - भर्तुराज्ञां न कुर्वन्ति ये च विश्वासघातकाः। तेषां नामापि न ग्राह्यं शास्त्रस्यादौ विशेषतः। मेघदूतस्य यक्षस्तावद्धनपतेः कुबेरस्योच्च पदस्थकर्मचारी। मानसरोवरजातेन स्वर्णकमलेन कैलासपतेर्महादेवस्य नित्याराधना विधीयते कुबेरेण। स्वर्णकमलस्यास्य रक्षणार्थं यक्षो नियुक्तः। परन्तु भर्तुः कुबेरस्याज्ञा सद्यपरिणीतेन यक्षेण यथाविधि न पालिता। तथाहि भर्तुराज्ञां निराकर्तुं तस्य नाम काव्यस्यादौ न स्वीक्रियते। पुनश्चोच्यते - न नाम ग्रहणं कुर्यात् कृपणस्य गुरोस्तथा। अभिशप्तस्य पत्न्याश्च मातापित्रोर्विशेषतः।आत्मनाम गुरोर्नाम नामातिकृपणस्य च।श्रेयस्कामो न गृह्णीयाद् नाम पुत्रकलत्रयोः। यक्षः स्वकर्तव्याद् विच्युतः। अतस्त मुद्दिश्य धनपतिना कुबेरेण शापः प्रदत्तः। अभिशप्त यक्षस्य नामग्रहणं न कुर्यादिति तु इदानीं सङ्गतम्। कश्चिदित्यनेन कस्यापि विशिष्ट जन स्योल्लेखो न कृतः। अपि तु पदस्यास्य प्रयोगेण विरहातुराः सर्वे विश्ववासिनः सूच्यन्ते। कश्चिदिति विषये मतान्तरं परिलक्ष्यते। उक्तञ्च- 'खण्डकाव्यमुखं कुर्यात् कश्चिदित्यादिभिः पदैः।' इति। कुत्रचिदपि एवं प्राप्यते यद्-यक्षस्य नाम हेममाली, यक्षिणी तु विशालाक्षी। इ-धातो अक्षयोगेन यक्षशब्दस्य व्युत्पत्तिः साध्यते। अत्र 'इ' इत्यस्यार्थः 'काम' इति, 'अक्ष' इत्यस्य चार्थः 'इन्द्रियम्' इति। अर्थाद् यस्येन्द्रियाणि खलु कामताडितानि स यक्षः। परन्तु मल्लिनाथेनोक्तम् 'कश्चिदनिर्दिष्टनामा यक्षो देवयोनिविशेषः' इति। अनन्तरं किमर्थं कविना यक्ष एव नायकत्वेन निर्वाचित इति विषये आचार्यवर्यस्य रमारञ्जनस्याभिमतं तावदिदं भवति - 'यक्षस्तावत् अप्राकृतलोकस्याधिवासी। यक्षबधूरपि अप्राकृतस्य लोकस्याधिवासिनी। प्राचीने काले बाधाबन्धहीनस्य बाधाबन्धमुक्तस्य प्रेम्नः चित्रणं निषिद्धमासीत्। यत् प्रेमानवलम्ब्य एव रोमान्स इत्यस्य सृष्टिर्भवति तस्य प्रेम्नः आलेख्याङ्कनं निषिद्धमासीत्। अथ च सामाजिकानां चित्ते बन्धनमुक्तस्य प्रेम्नः आस्वादनस्य कृते महती इच्छासीत्। अस्याः इच्छायाः पूर्णतादानार्थम् अभिज्ञानशाकुन्तलं मेघदूतञ्च विरचितम्। कालिदासेन चिन्तितं यदि अप्राकृतजनानवलम्ब्य बन्धमुक्तस्य प्रेम्नः उपस्थापनं क्रियते तर्हि औचितस्य लङ्घनं न स्यात्; एतत् सर्वं विचिन्त्य अप्राकृतस्य यक्षस्य नायकरूपेण निर्वाचनं कृतं मेघदूते, यक्षबध्वाः अपि नायिकारूपेण'14 इति।

# 'नारीरूपं पतिब्रतम्'

'नारीरूपं पतिब्रतम्' 'नारीणां भूषणं पतिः' इत्यादयः। या तु पत्युरानन्दं बिधत्ते सा एव कान्तिः। कुमारसंभवे प्राप्यते यत् - 'प्रियेषु सौभाग्यफला हि चारुता' इति। अर्थात् - 'सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति।' इति। पदमिदं कालिदासीयकाव्येऽस्मिन् अत्यन्तं गुरुत्वपूर्णं वर्तते। काव्ये यक्षोऽभिसप्तः किन्तु कथम्? तस्योतरं स्वाधिकारप्रमत्तः इति पदम्। यक्षः अभिसप्तः स्वाधिकारविच्युतात्। अपराधीनां दण्डस्वरूपः अभिशापः प्रयोगः कालिदासकाव्ये बहुत्रैव दृश्यते। अभिज्ञानशाकुन्तले दुर्वासामुनेरभिशापः शकुन्तलां प्रति, रघुवंशे सुरभिद्वारा अभिशप्तो भूपतिः दिलीपः एवञ्च 'विक्रमोर्वशीयम्' इति नाटके उर्वशी शापग्रस्ता भरतमुनिना। ब्राह्मण धर्मानुरक्तो वर्णाश्रमैकनिष्टः कालिदाससमीपे कर्तव्यच्युतिः, अपराध एव। शास्त्रविधानमस्ति- 'प्रतिवध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः'- अर्थात् पूजनीय व्यक्ति वर्गान् पूजा कर्तव्या। महाकविमाघस्य शिशुपाल वधकाव्ये दृश्यते भगवता कृष्णेन नारदम् अर्घ्यद्वारा सुष्ठुरूपेण पूजा कृता। तमर्घ्यमर्घ्यादिकयाऽऽदिपुरुषः सपर्य्यया साधु स पर्य्यपूपुजत्।गृहानुपैतुं प्रणयाद भीप्सवो भवन्ति नापुण्यकृतांमनीषिणः। अपराधिनः दण्डदानं विधेः विधानम्।अत्र कुबेरो निमित्तः एव। विवाहोत्तरकाले स्वार्थपरः आत्मस्वर्वस्वप्रणये महाविष्टस्य यक्षस्य कर्तव्या वहेला। स्वार्थचिन्तानि मग्नवशात् कर्तव्यहानिः तद्धेतुः प्रभुकर्तृकः अभिशप्तः यक्षः। प्रणयः अत्यन्तः पवित्रः उत्कृष्टः आनन्दस्वरूपश्च। परन्तु तत्प्रणयो यदि समाजिककर्तव्यसाधने प्रतिबन्धकः भवेत् तर्हि दूषणीयः खलु, सः प्रणयः। प्रणयस्य पवित्रता अपवित्रता वा कदापि न प्रणयी-प्रणयिनीद्वारा निरुपिता, समाजः अपि निरूपकः भवति।



## अमृतवाणी गीतातत्वार्थबोधः॥

**शत्रुघ्नश्रीनिवासाचार्यः पण्डित शम्भुनाथ शास्त्री वेदान्ती भागलपुर, ( बिहार )**

अमृतवाणी गीताज्ञानामृतं पीत्वा
विष्णुलोकं प्रयच्छति।।'
गीताज्ञानरसं पीत्वा
सद्यस्तरतिसागरम्।
कृपया वासुदेवस्य
मुक्तिलोकं प्रयच्छति।।
(स्वरचितः ) भगवता श्रीकृष्णेन यद् ज्ञानस्वरूपं गानं गीयते कथ्यते ङतद् गानं गीतम।अत्रोपनिषदः साररसःउपनिबद्धोत्रस्ति। उपनिषद् शब्दस्तु स्त्रीलि एव ङप्रयुक्तः भवति तस्मात ङभगभवतः श्रीकृष्णस्य गीतमपि गीता शब्देन ङव्यवह्रियते। किं वा भगवद्भगवता श्रीकृष्णेनार्जुनं प्रति ङयदमृततुल्यं ज्ञानं गीयतेङ उपदिश्यत इति गीता। गीतायाः ज्ञानम् गीताज्ञानम्। गीताज्ञानस्य रसः गीता ज्ञानरसः। श्रीमद्भगवद्गीतायाम उपनिषद्ब्रह्मसूत्रादिसकल शास्त्राणां ज्ञानस्यान्तिमः भागःसारःरसः वर्तते। तज्जन्यज्ञानं सुधारस इव मन्यते। यथा भगवतः विष्णोश्चरणोदकं पीत्वा जागतिकजीवानां पुनर्जन्म नभवति तथैव भगवच्चरणाश्रितजीवा अपि गीताज्ञानरसस्वरूपचरणोदकं पीत्वा सद्यः मायिकभवसागरं तरन्तिवैकुण्ठमधिगच्छन्तीत्यर्थः। महाभारतस्य भीष्म-पर्वण्यप्युल्लिखितमस्ति यत-
गीता गंगा च गायत्री
गोविन्देति हृदि स्थिते।
चतुर्गकारसंयुक्ते
ङपुनर्जन्म न विद्यते।।
महा/भीष्मपर्व/43/03
अपि च-आपदं नरकं धोरं
ङगीताध्यायी न पश्यति।
(स्कन्दपुराणे)
सर्वशास्त्रमयी गीता
सर्वदेवमयो हरिः।
सर्वतीर्थमयी गङ्गा सर्ववेदमयो मनुः।
महा/भीष्मपर्व/43/02
अत्रायं निष्कर्षः-गीता सर्वशास्त्रमयी गंगा वर्तते। गंगा भगवतः नारायणस्य चरणकमलेभ्यः निःसृतास्ति। तस्मात् गीता भगवतश्चरणोदकम्मन्यते। गीताध्यायी गीतामृतस्वरूपंङ चरणोदकं पीत्वा कर्मबन्धनान्मुक्तिं प्राप्य मोक्षं प्राप्नोति।

## ॥ अमृतं संस्कृतम्॥

**गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः**

।। धर्म एव जीवनम्।।
गीताज्ञानं सम्पूर्ण रूपेण धर्म एव।।
वास्तविकः धर्मः गीताज्ञानमेव।।
अत्र कृष्णस्य यस्सन्देशः स एव धर्मः।
धर्मस्यापि धर्मकृष्ण,
अतः कृष्ण एव साक्षाद्धर्मः।।
मानव जीवनं केवलं धर्मायैव।।
प्रसिद्धोऽयं श्लोकः नीतिशास्त्रस्य
' आहार निद्रा भय मैथुनञ्च, सामान्यमेतत् पशुभिर्नराणां।
धमी हि तेषामधिको विशेषः, धर्मेण हीनाः पशुभिः समानाः।।'
आहारादिः मानव-पशुमध्ये समस्वभावः,केवलं धर्मसेवनमात्रेण मानवाः कृत्यापि मानवाः। आकृतिमात्रेण पशुस्वभावसम्बन्धासक्तेन केवलं बाह्यतः मानवः आभ्यंतरिकेण पशुरेव।। तेन गीताज्ञानं आकृत्या कृत्या च मानवः वाह्याभ्यन्तराभ्यां मानवः मानवो भवतु इति निदेशाय प्रवर्तितम्।।

गीताज्ञानं महत् गभीरं दार्शनिकञ्च। प्रतिपदे प्रतिशब्दे च मानवात्मकल्याणाय धर्मसन्देशः सन्निविष्टः।। अत्र विभिन्नैः पूज्यपादैः सिद्धैः ऋषिकल्पैः सर्वकल्याणाय आत्मज्ञानाय च विभिन्नः विभिन्नः सुविचारः प्रकटितः।। स्वयं गीतायां प्रतिपदोक्तरूपेण सर्वत्र धर्मः ध्वन्यते। धर्मशब्दादेव गीतायाः आरम्भः।। अत्र वहुकल्याणकरं गभीरं तात्पर्यं मानवेभ्यः अनुपालनाय सन्दिशति। समेषां कार्यारंभे धर्मः आश्रयणीयः। अशुभ कार्यारम्भेऽपि धर्मः ध्यातव्यः। येन सम्भवतः अशुभोऽपि शुभो भवेत्। धर्म एव मानव जीवनस्य नैसर्गिकः स्वभावः इति ज्ञानाय धर्मशब्दादेवारम्भः। दुराचार दुश्चिन्तनादयः संसार सम्बन्धेन वाह्यरूपेण आरोपिताः नात्मनः धर्मः।। अतः सर्वात्मना मानवैः धर्म एव स्वकरणीयः, धर्मायैव यत्नो विधेयः। संसारे मात्रं धर्मः मम। नान्यः। गीतायाः आरम्भे धर्मः,गीतायाः अन्ते मम तेन सम्पूर्णा गीता'धर्मः मम' सम्पूर्णगीतैव धर्मः।।

**अन्यः विचारः**

गीतायाः प्रथम शब्दस्य 'ध' गीतायाः अन्तिम शब्दस्य 'म' इत्यनयोः संगोगेन धर्म इति शब्दः अभिध्वन्यते तेन सम्पूर्णा गीता धर्म एव। धमी रक्षति रक्षितः।। रक्षितः धर्म एव मां रक्षति। अन्यः एकः सूक्ष्मः दार्शनिक विचारः धर्मावतारः युधिष्ठिरः तस्य संचरणकेन्द्रं कृष्णः तेन धर्मक्षेत्रः कृष्णः कृष्ण एव कर्मप्रेरकः तेन कृष्ण एव कर्मक्षेत्रः तस्मिन् समवेताः अर्थात् न्याय दर्शन मतेन समवाय सम्बन्धेन नित्येन स्थिताः पाण्डवाः कौरवाश्च यतो हि परमात्मा नित्यः,आत्मापि नित्यः अयुतसिद्धपदाथ्र्योः सम्बन्धः समवाय एव तेन इति मतेन परमात्मनि चराचरजगत् समवायसम्बन्धेन तिष्ठति। परं स्वविचारानुसारेण परमात्मस्थितोऽपि फलं लभते।।यथा धृतराष्ट्रः स्वमनस्स्थितविचारेण पुत्रनाशं प्राप्तवान्। अर्जुनः आत्मकल्याणाय प्रश्नम् अपृच्छत् तेन जीवनस्यावश्यकतानुसारेण गीता निरगच्छत्। एकत्रैव चिन्तन भिन्नेन भिन्नं भिन्नं फलम्। अतः गीतायाः परमः सन्देशः सर्वदैव मानवाः शुभचिन्तनं कुर्युः। शुभचिन्तनं धर्मः।। तत्तु कृष्णस्मरणमेव।। अतः भगवान् कृष्णः सदैव निगदति मामनुस्मर।।

**॥ जयतु कृष्णः॥**

छायाकारः सौरभ कुमार

# ॥ कृष्णोऽप्रतिमः विलक्षणः॥

कृष्णोऽप्रतिमो विलक्षणः। अद्य गीताज्ञान संचरण समितेः आवासे कृष्णजन्माष्टमीमाश्रित्य कृष्णपूजन पूर्वकं कृष्णजीवन मालक्ष्य समुपस्थितेषु सद्भक्तेषु मध्ये ज्ञानविचारः प्रसृतः। कृष्णः अनुपमः अद्भुत अद्वितीयः अप्रतिमः विलक्षणः सर्वसौन्दर्य शीर्षः सर्वस्वसारः सर्वकल्याण केन्द्रः गुणातीतः गीतागायकः गोपीवल्लभः सर्वधन शीर्षगोपालकः गोविन्दः गोकुला नन्दनः सर्वनन्दनः व्रजनन्दनः नन्दनन्दनः नित्यानन्दनः धर्मनन्दनः देवनन्दनः देवकीनन्दनः वसुदेवन्दनः यशोदानन्दनः भक्तनन्दनः मित्रनन्दनः दीननन्दनः बालमण्डलनन्दनः नर्तननन्दनः सर्वविधनन्दनश्च शाश्वतः सर्वज्ञान वर्णनातीतः वर्तमानः भाति पर ब्रह्मणः सर्वावतारेषु कृष्णः महाद्भुतः। एककाला वच्छेदेनैव परस्पर विरोधीद्वय गुण केन्द्रः कृष्णः। कृष्णः अप्रतिमः क्रान्तिकारी। क्रान्तये निरतिशय पुरूषार्थः संचरते। कृष्णस्तु सर्वथा पुरुषार्थस्वरूप एव। मातृगर्भत एव सर्वथा सर्वविधविपरीतपरिवेशेषु कृष्णः सर्वविजयः शाश्वतः विजयः निरन्तरं प्रकाशते। अतः कृष्णः मानवजीवनस्य सार्थक्याय सर्वथा स्मरणीयः सन्देश वाहकश्च। कृष्णः न मानवसमः कदापि। मानवः प्राकृतिकः प्रकृतौ सत्वादिगुणत्रयः तिष्ठति। तेन मानवे गुणत्रयस्य प्रभावोऽपि चरति। परं कृष्णः प्रकृतिपरः दिव्यातिदिव्यः। अतः कृष्णे न सांसारिकाः दोषाः कदापिपरिकल्पनीयाः। स्वयमपि भगवान् कृष्णः कथयति 'अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम्' मूढाः तत्वज्ञानविहीनाः मां मानवं मन्वते। मम जन्मनि कर्मणि च दिव्यता विद्यते। मम जीवनं न कर्माबद्धं । अतः कृष्णस्य न कर्मबन्धनबद्धं जन्म भवति तेन तस्यावतारो भवति। प्रकृतेरावरणात् स्वेच्छापूर्वकं संसारपरिधौ भक्त कल्याणाय प्रसन्नाय च स्वेच्छापूर्वक समागच्छति। इदमेव जन्म। न तु मानववत् जरायुजः कृष्णः। कारागारे निवासः अपराधिनः परं कारागारे कारागाराधीक्षकः दिने रात्रौ च व्यवस्थानिभालनाय गच्छति तेन स न कदापि अपराधी गण्यते। तथैव कृष्णः न मानववत् सांसारिकः। न तस्य मानवसमः मृत्युः भवति। अन्तर्ध्यानं भवति। भगवतः कृष्णस्य विश्वस्मै महदवदानं विद्यते। गीताज्ञानतत्वसंचरणेन विश्वस्य सर्वविधं कल्याणं विद्यते। अतः कृष्णः विश्वपूज्यः। गीतायाः विविधाः सूक्तयः विश्वकर्मप्रेरणायै विश्वे स्वीकृताः प्रकाशन्ते।

1 कर्ण्येवाधिकारस्ते
2 योगः कर्मसु कौशलम्
3 कृपणाः फलहेतवः
4 जातस्य ध्रुवो मृत्युः
5ज्ञानिनस्तत्वदर्शिनः
6परधमी भयावहः

इत्यादयः । अतः कृष्णः मम जीवनं। तेन कृष्णं विना न जीवनं भद्रं।।अतः मानवजीवनस्य साफल्यायैव कृष्णः सदा सर्वदा पूज्यः। कृष्णस्य गीताज्ञानपालनमेव कृष्णपूजनं। कृष्णायैव कृष्णपूजा भवेत् तदैव सा पूजा सर्वविध कल्याणप्रदा। अतः गीताज्ञानं समाश्रय समाश्रय समाश्रय।

**जयतु कृष्णः**

# सोल्लासेन श्रीकृष्ण जन्मोत्सव-समारोहः सम्पन्नः

ख्यातिलब्धः भजनगायकः मनोजगुप्ता महोदयेन भक्ति संगीत संध्यायाः प्रस्तुतिः आकर्षणस्य केन्द्रं अभवत्

## कोरोना दिशा निर्देश सहितं महोत्सवाः सम्पादिताः

**प्रयागराजः। वार्ताहरः।** निशीथेनन्दनन्दन भगवान श्रीकृष्णः जन्माकारितम्। तदुपरिसोल्लासेन कोरोना दिशानिर्देश सहितं महोत्सवाः सम्पादिताः। श्री कृष्णस्य जन्मदिवसः श्री कृष्णजन्माष्टमी विद्यते। महानगरे अस्य दिवसस्यपोलक्ष्ये बहवः कार्यक्रमः समायोज्यमाना सन्ति। अलर्कपुर्यांस्थिते श्रीसच्चा अध्यात्म संस्कृत महाविद्यालये संत संघ परिसरे च अद्य स्थापना दिवस समारोहः सच्चाबाबा जन्म दिवसोत्सवः, श्रीकृष्ण जन्मष्टमी महोत्सवश्च भव्यरूपेण सम्पादितः अभवत्। अस्मिन् प्रक्रमे सत्राणां साहित्यिक सांस्कृतिक प्रतियोगितायाश्च कार्यक्रमाः अभवत्। समारोहेऽस्मिन् प्रयागस्थाः सर्वे विद्यालय-महाविद्यालयानां आचार्याः छात्राश्च आमंत्रिता सन्ति। अपरतः डॉ ऋचा सिंहः पूर्व अध्यक्षः इलाहाबाद विश्वविद्यालयस्य आयोजकत्वे प्रीतमनगरे दुर्गापूजा उद्यानेऽपि श्रीकृष्णजन्म महोत्सवस्य आयोजनं अभवत्। समारोहे प्रयाग पीठाधीश्वर जगद्गुरू रामानुजाचार्य स्वामी श्री श्री धराचार्य जी महाराजस्य श्रीमुखात् भगवतः श्रीकृष्णस्य जन्मनः रोचक कथायाः श्रवणस्य लाभः प्राप्स्यति। अनन्तरे प्रयागराज आकाशवाण्याः दूरदर्शनस्य च ख्यातिलब्धः भजन गायकः मनोज गुप्ता महोदयेन भक्ति संगीत संध्यायाः प्रस्तुतिः आकर्षणस्य केन्द्रं अभवत्। समारोहस्य समयः सायं 6 वादनतः 12 वादन मध्यरात्रि पर्यन्तम् अभवत्। कार्यक्रमस्य सम्यक् संचालनम् पंफूलचन्द्रदुबेमहाभागः कृतवान्। एतत् क्रमे श्रीसौदामिनी संस्कृत महाविद्यालये लक्ष्मीनारायणमन्दिर अलोपीबागे, तुलसी दास अखाड़ा दारागंज, निम्बार्क आश्रमे रामबाग, इस्कानमन्दिरे बलुआ घाट, पुलिसलाइन्स प्रयागराजे प्रभृतिषुस्थलेषु सोल्लासेन श्रीकृष्ण जन्मोत्सव समारोहः सम्पत्यन्तेस्म।

# ॐ नमो भगवते वासुदेवाय



**श्रीकृष्णः शरणं मम**

**वसुदेवसुतं देवं कृष्णचाणूरमर्दनम्।**
**देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्॥**
**वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः।**
**जनिष्यते तत्प्रियार्थं सम्भवन्तु सुस्त्रियः॥**

सच्चिदानन्दभगवान् श्रीकृष्णजन्ममहोत्सवस्य पावनपर्वणि सर्वेषां देशवासिनां मदीयाः शुभकामनाः। अनन्तकोटि ब्रह्माण्डनायको भगवान् श्रीकृष्णः सदा अस्माकं सर्वेषां हृदये रमयत्विति प्राथर्च्ये। भगवतः श्रीकृष्णस्य जन्ममहोत्सवो देशे विदेशे सर्वे जनाः मन्दिरेषु गृहेषु पुण्यस्थलेषु च प्रमुदिमनसा श्रद्धापूर्वकं मन्यन्ते। वासुदेवः श्रीकृष्णः स्वयं भगवान् परमतत्त्वं चास्तीति धर्मशास्त्रेषु वर्णितम्। 'कर्षति आकर्षति' इति कृष्णः। द्वापरयुगे भक्तानं संरक्षणाय दुष्टनां विनाशाय च मृत्युलोके भगवान् श्रीकृष्णो मथुरानगरस्य कारागृहे ऽवतृतः। भवन्माता भगवती देवकी पिता श्रीवसुदेवश्चास्ताम्। कंसः भगवतीदेवक्याः भ्राता मथुरानरेशश्चासीत् । कंसपितोग्रसेनः श्रीकृष्णस्य मातामहः। दुष्टेन कंसेन भगिनी देवकी आवुत्तः वसुदेवः च स्वकारागृहे बद्धौ। देवकीवसुदेवविवाहावसरे तयोरष्टमपुत्रः कंसमर्दन कारणं भविष्यतीति आकाशवाणी जाता। तस्मात्तौ कंसेनाति चिन्तितेन कारागृहे बद्धौ आस्ताम्। वसुदेवदेवक्योः सप्तपुत्रान् क्रूरःकंसः हतवान्। अष्टमपुत्रः कृष्णः जनितः इति विदित्वा आगच्छति। किन्तु तदन्तरे कृष्णस्य स्थाने नन्दगोपतनया आगत्य तस्याः स्थाने गोकुले कृष्णः रक्षितवान्। एतद्विषयं तत्स्त्रीकन्यया विदितः कंसः श्रीकृष्णस्य अन्वेषणे सर्वत्र स्वसैन्यं प्रेषितवान्। तद्व्याजया आगतान् शकटासुर तृणावर्तादीन् संहरति। अर्जुनवृक्षछेदव्याजया धुनि,चमु इति असुरौ संहरति। एवं लोकपालः कृष्णः गोकुलं त्यक्त्वा वृंदावनं प्रति आगत्य तत्र बक-उग्र-वत्सासुरादीन् संहरति। तत्रैव कालीयमर्धनं कृत्वा लोकरक्षणार्थं कालीयं मारयति। तत्सप्तवयसि एव कालनेमिपुत्रान् वेषभस्वरूपान् सप्तदैत्यान् मारितस्य कृष्णस्य नीला इति कन्यया साकं विवाहं भवति। एकदा एषः वृन्दावने इन्द्रयज्ञं न्यवारयति। तदा कृद्धः इन्द्रः बृहद्वर्षधारां निरंतरं वर्षति। तदा कृष्णः गोवर्धनगिरिं धृत्वा वृन्दावनजनान् रक्षति। तद्दृष्ट्वा इन्द्रोपि कृष्णस्य समीपे शरणागतिं प्राप्नोति। एतद्गोवर्धनगिरिप्रसंगेन सर्वे जनाः श्रीकृष्णं स्वयं भगवान् इति जानन्ति। एवं शंखचूड-अरिष्टासुर-रजक- पूतनी-कुवलयापीड-चाणूर-मुष्टिकासीन् हत्वा स्वमातुलं कंसं च मारितः श्रीकृष्णः देवकी वसुदेवयोः बन्धनं निस्सारितवान्। 16108 पत्नीन् प्राप्तः कृष्णः नरकासुरसंहारानंतरं स्त्री संरक्षणार्थं 16000 कन्यान् उद्वहति। यतः नरकासुरः तान् कन्यान् स्वबंधने वनिहितव्वन्। यदा कृष्णः नरकासुरं हत्वा तान् कन्यान् विमोचति। तदा ते प्राथर्च्यंति। नरकासुरात् बन्धितान् अस्मान् कोपि नेछति। अतः अस्माकं तावत् त्वमेव गतिः पतिः इति। तेषां प्रार्थनानुसारेण श्रीकृष्णः तान् उद्वहति।अन्ये लक्ष्मीस्वरूपाःअष्टमहिष्स्तावत् सन्दर्भानुसारेण कृष्णं प्राप्नुवन्ति। कृष्णः यादवकुलस्य राजा आसीत।

## रम्या रामायणी कथा




रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः।

श्रीहनुमान् महाभागः पुनराकाशमार्गेण गच्छन्नासीत्, तदानीमेका विपत्तिः पुनरागता।तत्र सागरे एका निशिचरी निवसति स्म। यन्नाम लंकिनी आसीत। सा बहु क्रूरासीत। यदा खगादयः आकाशमार्गेण गच्छन्तः पश्यति स्म तदा सा तेषां छायां जले विलोक्य तान् ग्रहीत्वा भक्षयति स्म।

निसिचरि एक सिंधु महुँ रहई।
करि माया नभु के खग गहइ
जीव जंतु जे गगन उड़ाहीं।
जल बिलोकि तिन्ह कै परिछाहीं

सा सदा निर्भया भूत्वा व्योममार्गेण गच्छन्तः जीवजन्तुखगान् ग्रहीत्वा खादति स्म। यथा सा श्रीहनुमन्तं दृष्ट्वा तेन सहापि तच्छलं कर्तमिच्छतु तथैव तत्कपटं ज्ञात्वा तदुपरि वेगेन स्वमुष्टिकया प्रहारं कृतवान्, अनेन सा पञ्चत्त्वं विलीना जाता।

सोइ छल हनूमान् कहँ कीन्हा।
तासु कपटु कपि तुरतहिं चीन्हा
ताहि मारि मारुतसुत बीरा।
बारिधि पार गयउ मतिधीरा

तदन्तरं सागरमुल्लंघ्य सः लंकां प्राप्तवान्। तत्र गत्वा लंकावनस्य शोभामपश्यत। तत्र वृक्षेषु पुष्पेषु भ्रमराः गुञ्जन्ति स्म। अपि च नानाप्रकाराणां पुष्पाणि फलानि दृष्ट्वा श्रीहनुमन्मनसि प्रसन्नता जाता। तत्रैव समीपे अभयपूर्वकं एकं शैलोपरि धावन् आरुह्य लंकापुरीमपश्यत्।

नाना तरु फल फूल सुहाए।
खग मृग बृंद देखि मन भाए
सैल बिसाल देखि एक आगें।
ता पर धाइ चढ़ेउ भय त्यागें

लंकापुरीं परितः सागरोऽस्ति। यस्याः स्वर्णप्राचीराः विशाला आसन्। येषां प्रकाशः सर्वत्र तत्र परिव्याप्तरासीत्। तत्र बहवो निशाचरा मल्लयोद्धाः खच्चराः सुसज्जितरथादयश्च यत्र तत्र विचरन्ति स्म।

आचार्य अरविंद पांडेय

-क्रमशः

## 'श्रीकृष्णाव्रतोत्सवम् अभिलक्ष्य शुभकामनाः'

गोवर्धनधरं वंशीधरं सर्वशुभंकरम्।
श्रीपतिं श्रीधरं श्रीशं कृष्णं वन्दे जगद्गुरुम्। सर्वेश्वरं हृषीकेशं हलधरानुजं हरिम्। पाण्डवसुहृदं श्यामं कृष्णं वन्दे जगद्गुरुम् । कंसस्य परमं शत्रुम् उत्तरागर्भरक्षकम्। चाणूरसूदकं देवं कृष्णं वन्दे जगद्गुरुम्।

**रचनाकारः**
**'त्रिपाठ्यनूपः'**

# तपस्विनी काव्यं गङ्गाधरमेहेरस्य रचनावलीषु सर्वश्रेष्ठं विविच्यते

संस्कृतसाहित्ये रामायणपदेन वाल्मीकिविरचितं रामायणमेव प्रसिद्धयति। भारतीयै रामायणम् आदिकाव्यं वाल्मीकिश्च तत्प्रणेतृतयाऽऽदिकविः अभिधीयते। रामायणं महाभारतात् प्राचीनम्। रामायणस्य रचनाकालः खीष्टपूर्वपञ्चमशतकात्पूर्वमेव मन्यते। भारतस्य काप्येतादृशी भाषा नास्ति यत्र रामायणस्यानुवादो न जातः स्यात्। वैदेशिक्यो भाषा अपि रामायणस्यानुवादेनात्मानं धन्यं मन्यते। श्रीरामचन्द्रः आदर्शभ्राता आदर्शपतिः आदर्शपुत्रः आदर्शशासकः आदर्शमनुष्यश्चासीदिति समर्थयितुमेव रामायणं निरमीयत, यत्र लक्ष्ये तत्सफलमभूत्। रामायणे चतुर्विंशतिः सहस्राणि श्लोकानामिति तत् चतुर्विंशतिसाहस्री संहितापदेनाभिधीयते। यावत् पर्यन्तं कवेः समक्षं वर्णनीयं वस्तु नागतं तावदयं मौनमादधौ, यदैव क्रौञ्चवधं करुणरसं दृष्टवान्, तदैवाकस्मादेवास्य मुखात् काव्यप्रवाहो निर्गतः तदस्य काव्ये करुणरस एव प्रधानत्वं भजते। कविताया लोकहितमुदेश्यं स्यादिति वाल्मीकिना कदापि न विस्मृतम्। अत एव चरित्रसृष्टौ वर्णने वा सर्वत्र कविरुच्चमादर्श विचारं च व्यञ्जितवान्।

तपस्विनीकाव्यं गङ्गाधरमेहेरस्य रचनावलीषु सर्वश्रेष्ठं विविच्यते सुधीपाठकैः। श्रीरामचन्द्रस्य वीरगाथां वर्णयतः संस्कृतादिकाव्यस्य वाल्मीकिरामायणस्य कथावस्तु समधिकृत्य तपस्विनी स्वकीयं वैशिष्ट्यं प्रख्यापयति। वाल्मीकिमुन्याश्रमे श्रीरामरमण्याः महादेव्याः सीतायाः निर्वासनोत्तरं जीवनयापनं काव्यस्यास्य मुख्यो विषयः। मौलिकोद्भावनां विषयवस्तु संयोजनां वर्णनशैलीं शब्दच्छटां साङ्गीतिकमाधुर्यं सरसत्वं च दधानं काव्यमिदं कवेर्गङ्गाधरस्य सर्जनशीलतायाः प्रद्योतकम्। कवीना 1914 खीष्टाब्दे तपस्विनीकाव्य प्रणीतम्। 1915 खीष्टाब्दे तस्य प्रथमसंस्करणं पुस्तकं प्रकाशितम्। अद्यावधि बहूनि संस्करणानि लभन्ते। एकादशसर्गसंवलिते करुणरसाङ्गीरसः तपस्विनीकाव्येऽस्मिन् वाल्मीकिरामायणोत्तरकाण्डस्य कालिदासप्रणीतरघुवंश चतुर्दशसर्गस्य भवभूतिकृतस्य उत्तररामचरितनाटकस्य च प्रासङ्गिकः प्रभावः संलक्ष्यते।



तपस्विनीकाव्ये सर्गानुक्रमिका विषयाः समासतः प्रस्तूयते। प्रथमेसर्गे, वैदेहीविषादवर्णनम्। द्वितीयसर्गे, वाल्मीक्याश्रमे सीतायाः निवासनवर्णनम्। तृतीयसर्गे, पत्नीवियोगिनः दाशरथेः दुःखवर्णनम्। चतुर्थसर्गे, वाल्मीक्याश्रमे प्रभातवर्णनम्। पञ्चमसर्गे, मनोहरप्रकृतेः चित्रणम्। षष्ठसर्गे, जानकया आत्मपरिचयः वर्णनम्। सप्तमसर्गे, सीताजीवनस्य करुणकथावर्णनम्। अष्टमसर्गे, सीतायाः मनसि चिन्तावर्णनम्। नवमसर्गे, सीतायाः पुत्रयुग्मकप्रसववृत्तान्तवर्णना। दशमसर्गे, सीतायाः वात्सल्यवर्णना। एकादशसर्गे, रामसीतयोः मिलनं वर्णनम्। प्रकृत्याः परमोपासकः आदर्शनारीचरित्रस्य सुदक्षः च चित्रकरः कविः गङ्गाधरमेहेरः। तस्य काव्यावल्यां नारी एवं प्रकृतिः, प्रकृतिः एवं नारी इत्यादीनां वर्णनं दृश्यते। व्यासः कालिदासः, भवभूतिः च तस्य कल्पनायाः चिरसहचराः। तस्य कृतिषु कीचकवधकाव्ये द्रौपदीवर्णनं, इन्दुमतीवर्णनं, अहिल्यावर्णनं, प्रणयवल्लरीकाव्ये शकुन्तलावर्णनम् एवमेव तपस्विनीकाव्ये सीतावर्णनं दृश्यते। कविना वाल्मीकिरामायणम्, महाभारतम्, रघुवंशमहाकाव्यम्, तुलसीदासस्य रामचरितमानस इत्यादीनां प्रभावः अनुभूतः। कालिदासस्य भवभूतेश्च दायादरूपेण कविः गङ्गाधरमेहेरः स्वीकर्तुं शक्यः। अत्र भवभूतेः उत्तररामचरिते चित्रितायाः सीतायाः प्रतिच्छाया दृश्यते। कालिदासस्य भवभूतिः च प्रभावः तस्य तपस्विनीकाव्यस्योपरि दृश्यते। रामायणस्य नायकः नायिका सीता। रघुकुलतिलकं श्रीरामचन्द्रं जनकनन्दिनीं जानकीं, तस्याः शुद्धं सुविमलं चरित्रञ्च आधारीकृत्य स्वभावकविः गङ्गाधरमेहेरः अरचयत् तपस्विनीमहाकाव्यम्। सीतारामयोः परस्परम् अनुरागः विप्रलम्भाशृङ्गारः। सीताचरित्रेण का प्रेरणा लभ्यते प्रकृत्याः परमोपासकः, आदर्शनारीचरित्रस्य सुदक्ष चित्रकरः कविगङ्गाधरः। तस्य काव्यवल्ली नारीम्- प्रकृतिं, प्रकृतिं - नारीं, वाचम् - अर्थं, धर्मं - धरणी, प्रदीपं - शिखां, सागरम् - ऊर्मिं, चन्द्रं - ज्योत्स्नां, वीणां - मूर्च्छनां, पुष्पम् - सैरभं, गीतिं च्छन्दः अतिमधुरसम्बन्धेन संयोजयति, सुमेलयति च।

पत्या निर्वासितायाः सीतायाः सर्वशून्यता अत्र चित्रिता। पतिरेव सीतायाः जीवनसर्वस्वम्। पतिकर्त्तृकप्रत्याख्याने सीता तपस्विनीति व्रतं जग्राह। तपस्यायाः हेमानले साध्वीसीतायाः चरित्रं दग्धीभूतं सत् जाज्वल्यमानं समभवत्। तपस्विनीकाव्ये प्रकृतिः निरपराधायाः हतभागिनीसीतायाः सखीरूपेण पार्श्वमण्डनं करोति। प्रकृतिः सर्वदा सीतायाः अन्तःकर्मसु विश्वासस्थापनेन च योगदानं करोति। कदाचित् राजराज्ञीम् आसने सीताम् आसीनां कृत्वा सम्मानस्य अर्ध्यं स्थापयति। कदाचित् प्रकृतिः मन्त्रवलेन सीतायाः चरित्रे पवित्रं निर्मलत्वं स्वच्छत्वं वा प्रदर्शयति। नारीप्रवर्गः पर्यायद्वये विभज्यते। एका जाया अन्या जननी। जाया प्रिया च चाञ्चल्यभावं, भ्रूविलासं, लास्यं, हासरक्तरङ्गैः सृजति। जननी आशीर्वादे वा कल्याणे वा पृथिवीसमा प्रस्फुटिता भवति। उदारप्रशान्तस्नेहनिर्झरपाते तापितप्राणान् शान्तं सुशीतलं करोति। जननी वर्षर्तौ जलदानं करोति, फलदाने सम्पृक्तं भवति, आतपतापितं धरावक्षः श्यामलशोभनं कृत्वा तम् अपूर्वरूपश्रिया मण्डितं करोति। शेषा नारी भवति गङ्गाधरस्य काव्यवर्णिता नारी। एषा नारी अन्यस्य व्रतभङ्गं न करोति। समस्तक्लेशं, निन्दां, निर्यातनां सहते, तस्याः साफल्यकामनां च करोति। त्वं स्वप्रजाजन सूरञ्जनानिष्ठतस्त्वत् पादे च मद्गतिरहं सहधर्मिणी ते।

निर्वासनं प्रकृतितोषणमस्त्विदं मे निर्दूषणं व्रतमदो भवतु प्रभोश्च।।

राजारामचन्द्रस्य उपयुक्तपत्नी सीता इति। सा निर्वासनं स्वभाग्यदोषम् इति पतिभक्त्याः अदर्शप्रदर्शनं करोति। मिथ्यापवादे रामचन्द्रेन परित्यक्ता इयं सीता पतिं दोषारोपं न कृत्वा विधिमपि निन्दान कृतवती। ऊचे सती हे सखि दुर्विपाकौः दुःखावली मा घटिता समस्ता। दोषी विधिर्नो मम कर्महेतोः कान्तः स्वभावात् करुणानिधिर्मे।।

तपस्विनीकाव्ये सीता आदर्शनारीरूपेण प्रतिभाति। साध्वी एवं पतिव्रतानारीभावे तस्या आदर्शं ज्ञातुं शक्यते।

उपसंहारः ओडिआ-साहित्यस्य समृद्धिसाधनार्थम् ओडिआ-भाषायाः समुत्कर्षप्रतिपादनार्थं च तपस्विनीमहाकाव्यं रचयिता कविना गङ्गाधरेण महती प्रसिद्धिः समवाप्ता। तत्कालीने ओडिआ-साहित्ये लब्धयशसः व्यासकवि फकीरमोहनसेनापतेः कविवरराधनाथरायस्य पल्लीकविनन्दकिशोर बलस्य विदुषामपरेषां च सश्रद्धा प्रेरणा निहितासीत् कवेः साहित्यसाधनायाम्। ओडिषायाः 'महानदी', 'अङ्ग', 'इब', 'तेल', चेत्याख्यानां नदीनां भौगोलिकी सूचनापि प्रदत्तास्ति प्रसङ्गानुसारं तपस्विनीकाव्ये जन्मभूमिं प्रति प्रीत्यनुरागान् दर्शयता कविना। पुनः सरितसागरयोश्चिरन्तनप्रेमप्रवाहप्रसङ्गे दृश्यते ओडिशायाः 'चिलिका' ह्रदस्य दृष्टान्तः परोक्षरूपेण सन्निवेशितः।

कवेर्गङ्गाधरस्य सारस्वतसाधकत्वं समाजसंस्कारकत्वं स्वाभिमानित्वं निर्व्याजत्वं सारल्यं धीरत्वं निर्भीकत्वं च परिशीलयन् प्रसिद्धिः समालोचकः मयाधरमानसिंहः तं कविं साहित्यिककवीर इति स्पुटं प्रतिपादयति। परिशेषे एतत् वक्तुं पार्यते यत् मानवीयं सूक्ष्मभावानां सुविश्लेषकरूपेण प्रकृति विभावानां प्रवीणसफलचित्रकाररूपेण च स्वभावकविः गङ्गाधरमेहेरः सारस्वत परिसरे सुपरिचित नामा महत्त्वपूर्णस्थानमर्हति।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्श्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**